१

श्रीगणेशायनमः ॥ अथमेषादिलग्नानांस्वभावाउच्यंते ॥ मंदसौम्यसिताःपापाः शुभौ भौमदिवाकरौ ॥
नशुभंयोगमात्रेणप्रभवेच्छनिजीवयोः १ परयोगेनजीवस्यपापत्वमपिनिश्चितम् ॥ कविःसा
क्षान्निहंतास्यान्मारकत्वेनलक्षितः ॥ मंदादयोनिहंतारोभवेयुःपापिनोग्रहाः ॥ शुभाशुभफ
लंतेषांज्ञातव्यानिश्रियोद्भवेत् ॥ ३ ॥ इतिमेषलग्नस्वभावः ॥ १ ॥ जीवशुक्रेंदवःपापाःशुभौभौ
मदिवाकरौ ॥ राजयोगकरःसाक्षादेकएवरविःसुतः ॥ ४ ॥ जीवादयोग्रहाःपापाःसंतिमार
कलक्षणाः ॥ ६ धेस्तत्रफलान्येवंज्ञेयानिवृषजन्मनः ॥ ५ ॥ इतिवृषलग्नस्वभावः ॥ २ ॥
भौमजीवारुणाःपापाएकएवकविःशुभः ॥ शनैश्चरेणजीवस्ययोगोमेषभवोयथा ॥ ६
नायंशशीनिहंतास्यान्मल्लस्यंपापिनोरले ॥ ज्ञातव्यानिचवृद्धस्यफलान्येतानिसूरिभिः
॥ ७ ॥ इतिमिथुनलग्नभावः ॥ ३ ॥ मार्गवेन्दुसुतौपापौभसुतौगिरसौशुभौ ॥ एकएवभवे
त्साक्षान्मृसुतोयोगकारकः ॥ ८ ॥ नहंताकविरन्येनुपापिनोमारकाहृयाः ॥ कुलीरसम्भ

१

वंचैव फलान्यूह्यानि सूरिभिः ॥९॥ इति कर्कलग्नस्वभावः ॥ रौहितेयशितौ पापौ कुजजी
वौ शुभावहौ ॥ न भवेद्योगमात्रेण न शुभं गुरुशुक्रयोः ॥१०॥ घ्नन्ति सौम्यादयः पापा मा
रकत्वेन लक्षिताः ॥ एवं फलानि ज्ञेयानि सिंहे यस्य मनीषिभिः ॥११॥ इति सिंहलग्नं ॥
कुजजीवेन्दवः पापा एक एव कविः शुभः ॥ भार्गवेन्दुसुतावेव भवेतां योगकारकौ ॥१२॥
न हंता कविरन्ये तु मारकास्ते कुजादयः ॥ घ्नंति पापाः फलान्येवं कन्यालग्नभुवो बुधैः
१३ ॥ इति कन्यालग्नं ॥ जीवार्कभूमिजाः पापाः शनैश्चरबुधौ शुभौ ॥ भवेतां राजयो
गस्य कारकाविंदुतत्सुतौ ॥१४॥ कुजो न हंता जीवाद्यपरं मारकलक्षणाः ॥ निहंतारः
फलान्येवं ज्ञातव्यानि तुलाभुवः ॥१५॥ इति तुलालग्नं ॥ सौम्य भौम सिताः पापाः शुभौ
गुरुनिशाकरौ ॥ सूर्यचंद्रमसावेव भवेतां योगकारकौ ॥१६॥ जीवो न हंता सौम्याद्या हं
तारो मारकाख्याः ॥ तेनेत्थं फलानि विज्ञेयान्येवं वृश्चिकजन्मनः ॥ इति वृश्चिकलग्नं ॥

२

एकएवकविः पापः शुभौ भौमदिवाकरौ॥ योगो भास्करसौम्याभ्यां न हंता चांशुमत्सुतः॥१५

घ्नंति शुक्रादयः पापा मारकत्वेन लक्षिताः॥ ज्ञातव्यानि फलान्येव चापे यस्य मनीषिभिः

१६॥ इति धनुर्लग्नं॥ कुजजीवेन्दवः पापाः शुभौ भार्गवचन्द्रजौ॥ स्वयं चैव न हंतारो मंदे

भौमादयः परे॥ २०॥ तल्लक्षणानि हंतारः कविरेकः सयोगकृत्॥ ज्ञातव्यानि बुधैरेवं

फलानि मृगजन्मनः॥२१॥ इति मकरलग्नं॥ जीवचंद्रकुजाः पापा एको दैत्यगुरुः शु

भः॥ राजयोगकरौ भौमः कविरेकोऽथ हस्पतिः॥२२॥ न हंता घ्नंति भौमाद्याः मारकत्वेन

लक्षिताः॥ एवमेव फलान्यूह्यान्येतानि घटजन्मनः॥२३॥ इति कुंभलग्नं॥ मंदशुक्रां

शुमत्सौम्याः पापा भौमविधू शुभौ॥ महीसुतगुरू योगकारिणौ न च भूसुतः॥२४॥

मारकाभीष्टमंदाद्यास्तेपि निघ्नंति पापिनः॥ इत्यूह्यानि बुधैस्तच्च फलानि झषजन्म

नः॥२५॥ इति मीनलग्नं॥ ततो न्यथा स्यात्सारेण मारकान्निर्दिशेद्बुधः॥ चन्द्रमा

नू विना सर्वे मारकाः परिकीर्त्तिताः ॥ रन्ध्रास्वदशायां स्वभुक्तौ च नराणां निधनं नहि ॥ कवि
द्दशायामपि छिद्रस्वभुक्तौ न कदाचन ॥ २७ ॥ इति पाराशरीये केरलशास्त्रे लग्नविवरणाध्या
यः ॥ अथ निश्चयत्वं लग्न उच्यते ॥ चंद्रलग्नाधिपो यत्र तत्र त्रिकोणमथापि वा ॥ तस्य म
ध्ये त्रिकोणं वा संदेहो नात्र उच्यते ॥ १ ॥ अथो भावफलम् ॥ देहाधिपः पापयुतो व्ययमस्था
य्यपापग्रहो वा अशुभं निहन्ति ॥ सर्वेषु भावेषु च योजनीयमेवं विधे भाववशात्फलं हि ॥
२ ॥ एवं तृतीये पि च सप्तमे पि फलं विमग्नं पुरुतिभिः प्रयत्नात् ॥ तथा व्यये चंद्रगृहे रिपौ
वा स्थिते विलग्नाधिपतौ फलं स्यात् ॥ ३ ॥ पापो विलग्नाधिपतिर्विलग्ने चंद्रस्य लग्ने
यदि वा वलं स्यात् ॥ दद्याति रोगं सहिके द्रसंस्थस्त्रिकोणलाभे शुभदं निहंति ॥ ४ ॥ वल्लो
न्नतामेव तु पापवत्तामतस्य चिंतं फलमानुसारात् ॥ नीचारिसूर्यस्य पमाग्रहे शुभस्व
र्क्षे विनाथादिगृहत्रये वा ॥ ५ ॥ देहाधिपश्चंद्रगृहाधिपो वा तृतीयरिःफारिगतो वलं स्या

३

न्॥ एवं विमृश्यं प्रकृतिभिः प्रयत्नाद्गृहस्य भावस्य फलं यथेतम्॥ ६॥ इति प्रथमभावफलं॥ अथ श्रेण
ञ्छतोपदिने चनाथः सुक्रस्य कर्त्ताद्भिमहत्रयस्य॥ संबंधयोगोयदिदेहपेन नेत्रं विधत्ते विपरी-
तभावं॥ ७॥ तत्रस्थितौ चन्द्ररवी निशांधं जात्यंधतां नेत्रपदेहपाकौ तु॥ पेत्रपर्क्षनाथेन युता-
स्तदांध्यं कुर्वंति मात्रादिफलं तथोह्यं॥ ८॥ दोषफलं न च सर्वमस्य दैत्योऽस्तंगतो ग्रहः॥ षडा-
दित्रयसंस्थश्चेन्नहि नादोषफलं भवेत्॥ वागीशो वा ग्रहाधीशो षडादित्रयसंस्थितो॥ मूकतां
कुरुतो ह्येवं पितृमातृग्रहाधिपौ॥ १०॥ वागीशो वा ग्रहाधीशा विना स्तलयसंस्थिताः॥ कु-
र्वन्ति तेषां मूकत्वमूह्यमेवं मनीषिभिः॥ ११॥ कुटुंबकारको लोकेंद्रत्रिकोणे भगता ग्रहः॥ स
कुटुंबी कलत्रेशाः कुटुंबं वा कलत्रके॥ १२॥ पापर्क्षपातनहस्था वा यावंतस्तसमा रागके॥ कल-
त्रे निर्दिशेत्स्त्राज्ञा पापतेषां बलाद्भवेत्॥ १३॥ विद्याधिपो जीवबुधौ पितृषामरित्रपस्यो कु

३

चौ१

स्तौ नतौ चेत् ॥ केन्द्रत्रिकोणे स्वगृहे तु संस्थो प्रपच्छ्रतां तौ च प्रजां विधां ॥१४॥ एवं बुधस्त्रां

गिरसः षष्ठाद्विये पस्थितो निर्धनतां प्रदत्ते ॥ केंद्रत्रिकोणे स्वगृहे स्वसंस्थो धनाभिवृद्धिं कुरु

ते स्तदेव ॥१५॥ इति द्वितीयभावफलं ॥ सभौमो भ्रातृभावेशः षष्ठादिव्ययसंस्थितः ॥ भ्रातृकें

द्रगतो वापि भ्रातृभावं विनिर्दिशेत् ॥१६॥ नो पापयोगतः पापो द्वेत्रयोगेन वा पुनः ॥ उत्ता

पसहजान्स घ्नोनिहतः भ्रातृन्विनिश्चयात् ॥१७॥ स्त्रीगृहे भ्रातृभावेशः स्त्रीगृहे भ्रातृ

गो पि वा ॥ भगिनी स्यात्तदा भ्राता पुरुषः पुंगृहे भवेत् ॥१८॥ मिश्रो मिश्रफलं वाच्यं बला

बलविनिर्णयः ॥ ज्ञातव्यो विदुषा सम्यक् भ्रातृनिश्चयसंयुजा ॥१९॥ इति तृतीयभाव

फलं ॥ अगेहाधिनाथेन युते तु गेहे देहाधिपे वापि गृहाभिलाभः ॥ युते षडादेतु विप

र्ययः स्यात्गृहाधिपे देहपतौ च हन्तृ ॥२०॥ केंद्रत्रिकोणे च शुभग्रहेण युते समीचीनगृहं

नौ२

४

मित्रलाभः ॥ क्षेत्रस्य चिंता सधनाधिपेन जीवेन चिंता तु सुखस्य कार्या ॥ ४१ ॥ दिग्यांगणावाह
नवस्त्रभूषाचिंता तु कार्या भृगुणा बुधेन्द्रैः ॥ तमः प्रातिभामपि चिंत्यमाहुः केंद्रेण पुत्रः प्र
निनाचमाना ॥ ४२ ॥ बुधेन वृद्धिः सदसन्नदृक्ष्संस्था ॥ तेन सत्येन युतेन चेत्स्यात् केंद्र
त्रिकोणे शुभगते शुभसत्त्वपक्षपता वापि स्वतुंगगेन ॥ ४३ ॥ इति चतुर्थभावफलम् ॥ ४ ॥ षडा
दित्रयसंस्थखेटैः सुताधीशोऽपि पुत्रलाभः ॥ केन्द्रत्रिकोणसंस्थैस्तु पुत्रलाभाभिसंभवः ॥ ४४ ॥
सत्पुत्रलाभः सुतपे सुरेज्ये शुभे शुभगेहे शुभगते तनुभानौ ॥ एकः स्थितः स्यात्सुत एक एव स्थि
तः शुभः केंद्रनवात्मजस्थः ॥ ४५ ॥ पितापि चिंत्यो नवमे सुतेर्ने प्येवं विपश्चिज्जनमूह
नीयं ॥ मीसुतः क्षेत्रकरः मृदिष्ठः कर्मे स्थिते चापि विधित्वयं वे ॥ ४६ ॥ इति पंचम
भावफलं ॥ ५ ॥ षष्ठाधिपस्तु चेत्पापो देहे वाप्यष्टमे स्थितः ॥ तदा व्रणो भवेद्देहे कर्मस्था

नेष्वयं विधिः ॥२७॥ एवं पित्रादिभावेभ्यस्तत्तत्कारकैः संयुताः ॥ व्रणाधिपयुताश्चापि षष्ठा
ष्टमव्ययगता यदि ॥२८॥ तेषामपि व्रणं वाच्यमादित्वेन शिरोव्रणः ॥ इंदुना तु मुखे कण्ठे भौ
मेनांगे च नाभितः ॥२९॥ गुरुणा नासिकायां च भृगुणा नयने पदे ॥ शनिना राहुणा
कुष्ठो केतुनापि तथा भवेत् ॥३०॥ लग्नाधिपः कुजः देत्रे बुधस्य यदि वा भवेत् ॥ तत्रैत
त्र स्थितो ज्ञेन वीक्षितो भवेत् कुष्ठप्रदः ॥३१॥ लग्नाधिपः कुजो ज्ञो वा चंद्रेण यदि संयुतः
राहुणा शनिना वापि कुष्ठं तस्य विनिर्दिशेत् ॥३२॥ लग्नाधिपं विना लग्ने स्थितश्चेत्त
मसा भाशी ॥ श्वेतकुष्ठं तदा कृष्णकुष्ठं च शनिना सह ॥३३॥ कुजे च रक्तकुष्ठं स्यात्तद्दे
वं विचारयेत् ॥ बुधियामान संस्थं कृत्वा तत्तद्विचारयेत् ॥३४॥ लग्नषष्ठांशनाथो धीमा
रविणा यदि संयुतः ॥ ज्वरः कुजेन ग्रंथिः स्याच्छस्त्रव्रणमथापि वा ॥३५॥ बुधेन

९२

पित्तं गुह्यरोगा स्युस्तु विनिर्दिशेत् ॥ ३५ ॥ शुक्रेण संयुतेनाथ स्थितिः स्फोटः शनिसंयुताः ॥ ३६ ॥
गण्डमालतः पीडा तमः केतोर्गृहे भयम् ॥ एवं मिश्राद्भावानां तत्तत्कारकयोगतः ॥ ३७ ॥
गण्यं तेषां भवत्येवमूहनीयं प्रयत्नतः ॥ पाराशरीमतेनाहं भेदतः कल्पये घृतः ॥ ३८ ॥ इति ष
ष्ठभावफलं ॥ ६ ॥ कलत्रेशो यदा स्वर्क्षे षडादित्रयसंस्थितः ॥ रोगिणीं कुरुते जायां तत्पातुंगादि
कं विना ॥ ३९ ॥ स्त्रीपुत्रपात्रैकफलचिंतनानि कार्यं त्वनेकं मदनाधिपेन ॥ शुभेन कार्यं तु शु
भं तथैव पापेन पापं फलमूहनीयं ॥ ४० ॥ सप्तमे संस्थिते शुक्रे ऽतीव कामी भवेन्नरः ॥ पत्र
तत्र स्थितो यस्य शुक्रः स्त्रीमरणं भवेत् ॥ ४१ ॥ कुटुंबेशः कलत्रेशो लग्नाधीशस्तथा भवेत्
कुटुंबेशः कलत्रेशो व्यभिचारी भवेद्ध्रुवम् ॥ ४२ ॥ इति सप्तमभावफलम् ॥ ७ ॥ आयुःस्थानाधि
पः पापैः सहैव यदि संस्थितः ॥ करोत्यल्पायुषं जातं लग्नेशो यत्र संस्थितः ॥ ४३ ॥ स्वस्थाने सं

शंकेवापि मिश्रांशो ऽमित्रमं दिशेत् ॥ दीर्घायुष्यं करोत्येवं लग्नेशो ऽष्टमगः पुनः ॥४४॥ षष्ठे व्यये च पाताले
व्ययाधीशो ऽरिपो यदा ॥ लग्ने ऽष्टमे स्थितो वापि दीर्घमायुः प्रयच्छति ॥४५॥ एवं चस्वामिनाचिं
ता कार्या तर्कविचक्षणैः ॥ कर्माधिपेनापि तथा चिंतनं कार्यमायुषः ॥४६॥ लग्नादष्टमभं
देशो ऽमेशात्केंद्रत्रिकोणके ॥ लाभे वा संस्थितस्तस्य हि शैशवे दीर्घमायुषः ॥४७॥ एकयो वलवान्
खेटस्तत्पाके तदनुसारतः ॥ दीर्घं चाल्पं तथा मध्यमायुर्देयं तथादिशेत् ॥४८॥ इत्यष्टमभावफ
लं ॥८॥ भाग्याधिनाथो ऽपि च भाग्यकर्त्ता शुक्रोपि पापैः सह चेत्त्रिषु स्यात् ॥ षडादिभावेषु च
भाग्यहीनस्त्रिकोणकेंद्रायगतो ऽपि भाग्यं ॥४९॥ अनेन धर्माः परिचिंतनीयाः पिता च वि
त्तं निजमातुलश्च ॥ शुभे शुभस्थानगते शुभं स्यात् दुष्टे यतत्र विपर्ययः स्यात् ॥५०॥ इति नवम
भावफलं ॥९॥ कर्माधिपो वलोनश्चेत्कर्मवैफल्यमादिशेत् ॥ वलयुक्तो भवेत्सो ऽयं ज्योति
ष्टोमादिकर्मकृत् ॥५१॥ यदि केंद्रत्रिकोणस्थो ज्योतिष्टोमादियोगकृत् ॥ अत्राप्यश्विंत

के० ६

धि ४

नं कार्यं कार्य्यं स्यात्कर्मणस्तथा ॥ ५२ ॥ शत्रुनीचगृहं त्यक्त्वा षष्ठाष्टमगृहं तथा ॥ केंद्रत्रिकोणगा
श्चेत्स्यात् द्युदर्द्धं वदेदिति ॥ ५३ ॥ इति दशमभावफलं ॥ १० ॥ लग्नाधिपो यदा लाभे तिष्ठेत्केंद्र
त्रिकोणयोः ॥ बहुलाभं तदा दद्यात्स्वोच्चे स्वर्क्षगतोपि सन् ॥ ५४ ॥ इत्येकादशभावफलं ॥ ११ ॥
चंद्रे व्ययाधिपो धर्मगश्च लाभे शुभसंस्थितः ॥ स्वोच्चे स्वर्क्षे निजांशे वा वाधिमित्रांशकेपि वा ॥ ५५ ॥
दद्याद्दंगारपर्यंतं दिव्यांगं पेस्त्रशोभवान् ॥ पुरा पूर्व रमणीदोर्मर्द्यारसा देवावलिंवतम् ॥ ५६ ॥
पराद्धंशायनान्होऽदनानि नयते प्रभुः ॥ एवं स्वशत्रुनीचांशेऽस्तांशे वाप्यष्टमे रिपौ ॥ ५७ ॥
संस्थितः कुरुते जातं कांतासुतविवर्जितम् ॥ व्ययाधिपः परिक्रांतं द्रव्यभोगनिराकृतं ॥ ५८ ॥
स्वोच्चकेंद्रस्थितः कुर्यात्कांताकेलिधनान्वितं ॥ लग्नाधिपो बलयुतः पापसंबंधवर्जितः
॥ ५९ ॥ यदि तिष्ठति लग्ने हि धनान्यंकुरुते नरः ॥ देहहीं देहचिंतादौ धने धनविचिंतनं ॥ ६० ॥
एवं मात्रादि भावेषु प्रोक्तं तत्सर्वं विचिंतयेत् ॥ उक्ता युक्तिमता वाच्यं व्यये शास्त्रसर्वभावतः ॥ ६१

६

इति द्वादशभावफलम्॥१२॥ अथ सामान्यभावफलं॥ बली धनेशो धनकारकस्तथा॥ बुधे
ज्यकोकेंद्रयुतर्क्षभागगो॥ लाभे निजांशे यदि वा निजालये स्थितो धनाढ्यं कुरुते नरं स
दा॥१॥ विक्रमेशो बलाढ्यश्च भ्रातृकारकखेचरः॥ केंद्रत्रिकोणलाभोच्चस्वर्क्षत्र्यंशेषु संस्थि
तः॥२॥ दद्यात्सभ्रातरं त्वत्र प्रवीणं विषयान्वितं॥ बलेवंधुस्थानिजवाहमध्येतथैव तत्
स्थाद्बहुवंधुसौख्यं॥३॥ बली महेश्वरः सुखकारको बली प्रयच्छति द्राक् बहुभोगमंदिरं॥
अनेन सद्वाहनवेश्मवंधुमात्रादिचिंता परिकल्पनीया॥४॥ इति पाराशरीये केरलशा
स्त्रे भावाध्यायः॥ लग्नादष्टमं तृतीयं भवति मृतिपदं तत्र ये पापखेटा ये वा तन्नाथयुक्ता
स्तदधिपतिदशां मृत्युमेवं दिशंति॥ एवं सर्वत्र चिंत्यं तनुधनसहजे भावनाथे सुतमन्त
द्रेस्तद्वेदविज्ञैः परमथसहसा तद्दशायां च भक्तौ॥१॥ अथ भावकारका ग्रहाः॥ सूर्यो

के॰पा॰
७

गुरुः कुजः सोमो गुरुर्ज्ञश्च सितः शनिः । गुरुश्चंद्रः पूज्यमंदौ कुजश्च भावकारकाः ॥२॥ इति भा
वकारकाः ॥ लग्नाच्छनिर्विषमो दंशके स्तनाथः केंद्रे स्वकाय भवने यदि वा त्रिकोणे ॥ किं वा
यदस्तभवनाधिपतिस्तथा स्यात्लाभं प्रयाति सततं पतिवल्लभत्वं ॥३॥ इति पाराशर्ये
केरलमतासेनत्वादि भावाध्यायः ॥४॥ अथ सामान्यतो भावफलं ॥ यद्भावाधिपतिर्वि
लग्नभवनात्षष्ठाष्टरिःफोपगास्तद्भावो द्रुवकृन्तनः प्रथमतोऽदुःखं वदेन्निश्चयात् ॥ म
त्वीशान्वितभावपस्य च फलं तद्वृद्धिदं वा पुनर्भावाद्भावपतिर्व्ययाष्टरिपुगो भावोऽन्तकृद्दुःख
प्रदः ॥१॥ लग्नादिभावाद्रिपुरंध्ररिःफे पापग्रहास्तद्भवनादिनाशाः ॥ सौम्यास्तु नातत्र
फलप्रदेस्ताद्भवादिनाशं फलमेवमाहुः ॥२॥ यद्भवनाद्योऽरिपुरंध्ररिःफे द्रुः स्यान्न गोप
द्भवनस्थितो वा ॥ तद्भावनाशं कथयंति तज्ज्ञाः शुभेक्षिते तद्भवनस्य सौख्यं ॥३॥ तन्नाद्भवा

स्थिकोणे स्वसुखमदनमेषास्पदे सौम्ययुक्ते पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते ॥
भावानां पुष्टिमाहुस्तदपचयकरं तत्र पापालयेषु एषां भंगं मिश्रं मिश्रमहेंदु सकलमपितथा मूर्त्तिभा
वादि भावानां ॥४॥ नानास्थानगतो दिवाकरकरैर्लुप्तप्रभः कृश्यपो नीचारातिगतोथवा यदि
भवेत्सौम्यैरयुक्तो स्थितः ॥ तद्भावस्य विनाशनं प्रकुरुते पश्यंपतिखेटैर्युतोस्त्वेवं पूर्वफलप्रदेन
हितस्तथा मूर्त्यादि भावानां क्रमः ॥५॥ इति सामान्यभावफलं ॥ इति पाराशरीये केरलशास्त्रे भा
वविवरणो नाम चतुर्थोऽध्यायः ॥ अथ दशाध्यायः प्रारभ्यते ॥ लग्नाधिपः पापखगो यदि
स्यात् तद्दशायां क्षितिपालकोपात् ॥ मानार्थनाशं निगदंत्य एणां स्थानाच्युतिः स्वज
जनैर्विरोधः ॥२॥ पापग्रहाणां मपहारकाले पापग्रहस्यैव दशासु काले ॥ मृत्यार्थस्वात्मा
दि सुहृद्गणानां विनाशमायाति शुभैरदोषः ॥३॥ वित्तेशशुभे शोभनखेचरेण तत्पाककाले

+ शुभाः स्मरो गोगिंदु दिने ध्वरणां ॥ अंतर्दशायां धननाशमाहुः पापान्विते तद्भवने तथैव ॥१॥ धनान्वितः पाप
+ खगास्तदास्या ३ ओ॰

धननाशमेति ॥ शुभग्रहाणामपहारकाले पापा भवेद्धर्मजवाग्विलासः ॥ ४ ॥ पापग्रहे विक्रमभावु
नाथे पापान्विते पापवियच्चराणां ॥ अंतर्दशायामनलात्स्य चौरैर्दुःखं समायाति शुभप्रदेपि ॥ ५ ॥ पा
केलिसंक्रे पानले चौरभूपैर्दुःखं मनोद्वेगमतीव कष्टम् ॥ सोत्थग्रपापग्रहदायकाले शुभेपि नित्यं ला
दृशमस्त्रे नास्ति ॥ ६ ॥ दुश्चिक्यभावाधिपदायकाले सौम्येतरेणामपहारकाले ॥ नाशं वदेत्तत्र सहोद
राणां भवेद्विरोधः सहजैर्विशेषात् ॥ ७ ॥ देवाधिपस्यापि शुभेतरस्य पापग्रहाणामपहारकाले
स्थानेच्युतिर्वैश्यविनाशमेति नीचाश्रयान्नामपहारकेपि ॥ ८ ॥ उच्छिष्टमन्नं कुत्सितभोजनं च पा
पग्रहाणां शुभमेशकाले ॥ अंतर्दशायां भवदेन्नवराणां शुभग्रहस्येन्न तथा फलं तु ॥ ९ ॥ ए
जोग्निचौरैर्भयमानमेरोगाद दशाविपाके शुभेतराणां ॥ अंतर्दशायामतिकष्टमेति प्रमेहगु
ल्मोदरस्य पित्तकासैः ॥ १० ॥ दारेशपापग्रहदायकाले स्त्रियो विरोधो मरणं च तस्याः ॥ विद

शयानं च पुरीषमूत्रलिप्तं वदेत् पतिकोपमत्र ॥११॥ रंध्रेशकाले फणिनाथभौमः शनैश्चरेण
मपहारकाले ॥ आयुर्व्ययेशो वित्तविनाशनं च विदेशयानं सहजैर्विरोधः ॥ भवेच्छुभेस्वैवद
शाविपाके शनैश्चराहोश्च दिनेश्वरस्य ॥१३॥ कारागृहप्राप्तिरनेकदुःखं दुःखं च शोका
नलदग्धदेहः ॥ कर्मेश्वरस्यांतरभुक्तिकाले पापग्रहाणामपकीर्त्तिमेति ॥१४॥ दशावि
पाके त्वथ लाभपस्य भुक्त्यंतरे द्रव्यविनाशनं च ॥ रव्यारभौमौ दृशनैश्चरेणं कार्यार्थिस
घ्रं क्षितिपालकोपान् ॥१५॥ व्ययेशदायरविसूनुभुक्तौ दिनेशभुक्त्यात्मजयोर्विरोधः
कलित्वयोमानधनं देयोचेराहोश्च भुक्त्यावगिर्वर्गपीडा ॥१६॥ तत्कालशत्रुप्रभवात्म
लेनं मित्रेयदस्यात्फलमर्द्धमाहुः ॥ अन्योन्यवश्याश्च मदायकाले स्थानच्युतिर्वा मरणं
विशेषात् ॥१७॥ स्पष्टीकरिष्यंति दशाविभागे विस्तारमार्गेण मुनींद्रजालाः ॥ श्री

त२

पान्ततः संकुचिता भवाकेरन्क्रमगतहारेणां फलपाकपंक्तिः ॥ ॥इतिपाराशरीयेकेरलशास्त्रेम
हादशाफलं ॥ अथकेन्द्रबलेलक्षणं ॥ केन्द्रत्रिकोणापण्ड्रपकान्तस्थखेटांकसंभृतान् ॥ इन
निघ्नान्हरेद्दिग्भिर्लब्धमायुः स्फुटीभवेत् ॥ अथनक्षत्रबलेलक्षणं ॥ परमायुःप्रमाणेनगण
येत्कृतनाडिकां ॥ नक्षत्रस्यहरेद्भागंतच्चेत्यायुर्विशोधयेत् ॥२॥ भभुक्तनाड्यादिगुणाहतं
तत्षष्टिभिर्विभक्तानखनेत्रभूमयः ॥ तद्दलेमायुःप्रवदन्तिसूरयस्ततोदशापाचनयन
प्रवच्मि ॥३॥ अथदशाक्रमः ॥ रवीन्दुकुजराहवःसुरगुरुर्यमज्ञकेतुजः शिखीदनुज
पूजितोज्वलनभादितस्त्रिभमात् ॥ दशाब्दपरिमाणकंरसदशागधत्यस्तथामहि
षड्नविंशतिर्जलदगानखोतेक्रमात् ॥४॥ अथदशानयनविधिः ॥ भभुक्तनाड्यादि
हतंखवर्षैर्लब्धंभभोगैःखलुपूर्वभुक्तं ॥ वर्षादिकंतच्चविशोध्यशेषंदशादिकायाः अभि

मोगपसंज्ञा॥५॥ अथांतर्दशाविधिः॥ दशा दशाहतांकार्या दिग्भक्ता मासपूर्विका॥ लब्धाश्चां
तर्दशा मासाः शेषास्त्रिघ्ना दिनोनि च॥६॥ शाकाब्दे जनने स्फुटार्कप्रमुखं मासादिकं स्था
पयेद्यो ऽपनत्रमतो दशा व्रजमुखं नीर्णं हि सा घा दशा॥ तस्मिन्नत्रभाके स्फुटार्कप्रमिते सो
एकप्ये मासके त्वेवं संकलितादशांतरं खितात्वेवं निजांतर्दशा॥७॥ अथ फलानि॥ शुभाते
स्वगेहे स्वगृहे पगानां दशाः समस्ताः शुभदा भवंति॥ नीचे स्थिताः पापगृहस्थगानां नेष्टाः
प्रदिष्टाः मुनिभिः पुराणैः॥८॥ अथ ग्रहावस्था॥ दीप्तः स्वस्थश्च मुदितः शान्तो हीनोऽति
दुःखितः॥ विकलश्च खलः कोपी नवधा खेचराः मताः॥९॥ तेषां लक्षणं यथा॥ उच्चस्थः
खेचरो दीप्तः स्वस्थः स्वर्क्षे ति मित्रभे॥ मुदितो मित्रभे शांतः सत्सरे दीन उच्यते॥१०॥ शत्रु
ऽः खपसेयुक्ते विकलः पापसंयुतः॥ खलः पराजितो ज्ञेयः कोपी स्यादर्कसंयुतः॥११॥

| दीप्त | स्वस्थ | मुदित | शांत | दीन | दुःखित | विकल | खल | कोपी |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | | |
| | | | | | | | | |

पृथक् पृथक् फलं तेषां दशाकाले विशेषतः ॥ तत्तन्नामानुरोधेन परिपाके फलं वदेत् ॥ १ ॥ या
अथ दीप्तादि दशाफलं यथा ॥ पाके प्रदीप्तस्य धराधिपत्वम् उत्साह धैर्य्यं धनवाहनं च ॥ स्त्री
पुत्रलाभं सुखबंधुपूज्यं क्षितीश्वरैर्माननमेति विद्यां ॥ ३ ॥ स्वस्थस्य खेटस्यापि दशाविपा
के स्वस्थो नृपाल्लब्ध धनादिसौख्यम् ॥ विद्यायशः प्रीति महत्वतां च दारार्थ भूम्यात्मज
धर्ममेति ॥ ४ ॥ मुदान्वितस्यापि दशाविपाके वस्त्रादि भूगन्धसुतार्थ धैर्य्यं ॥ पुराण
धर्म्मश्रवणादि कान्तिदानादि यानाम्बर भूषणं च ॥ ५ ॥ दशाविपाके सुख धैर्य्यमेति
शान्तस्य भूपुत्रकलत्रपानं ॥ विद्याविनोदान्वित धर्मशास्त्र वक्तृत्वदेशाधिपपूज्यता
च ॥ ६ ॥ स्थानच्युतिर्बंधुविरोधता च हीनस्य खेटस्य दशाविपाके ॥ जीवत्यसौ कु
त्सितहीनवृत्त्या पापमोजनै रोगनिपीडितः स्यात् ॥ ७ ॥ दुःखान्वितस्यापि दशाविपा

१०

के नानाविधं दुःखमुपैति नित्यं ॥ विदेशगो बंधुजनैर्विहीनः क्रोधाग्निसंतप्तमयमाघ्रितमः
॥१८॥ वैकल्यखेटस्य दशाविपाके वैकल्यतां चापि मनोधिकारे ॥ मित्रादिकानां मरणं
विशेषात्स्त्रीपुत्रपानां वरं चापि पीडा ॥१९॥ दशाविपाके खलु हे वियोगः खलस्य खेट
स्य विदुर्वियोगं ॥ शत्रोर्जनानां धनभूमिनाशमुपैति नित्यं स्वजनैश्च नित्यं ॥२०॥
कोपान्वितस्यापि दशाविपाके पापं समायाति बहुप्रकारं ॥ विघातयशः स्त्रीधनभू
मिनाशं राज्ञां च विजनैर्हरते च रोगी ॥२१॥ इति पारमार्थीये केरलशास्त्रे प्रदीप्तादिदशा
फलं ॥ तेजस्विनमति दुःखिनं रविभवेन नृपाच्च लब्धधनम् ॥ स्वनवांशबलयुक्तः
पुरुषं कुर्यात्फलान्वितं ख्यातं ॥१॥ शुभदर्शनबलयुक्तः पुरुषं कुर्यात्फलान्वितं ख्यातं ॥
शुभदं प्रधानममलं सुरूपदेहं ससौम्यं च ॥२॥ अन्योन्यपक्षपातात्सह पाककालेन पाद्भूयं

११

त्मजैर्विरोधं॥स्त्रियाविरोधंसुतदारनाशंदारिद्र्यजितैर्बध्वाजितिमनोविकारं॥३॥पाकेश्व
रेलग्ननाथस्यभुक्तौस्थानच्युतिर्बन्धुजनैर्विरोधं॥विदेशयानंस्वजनैर्विरोधंपादाद्रि
हृद्रोगमुपैतिकाले॥४॥दशाधिपेनाथयुतस्यभुक्तौस्त्रीपुत्रभृत्यार्थहृतेर्विनाशं॥उ
द्योगभंगंस्वजनस्यकष्टमाकस्मिकेदुःखमुपैतिकाले॥५॥दशाधिपाच्छिद्रगतस्यभु
क्तौमहत्त्वयानांबरमध्यमालस्यान्॥परोपकारंस्वजनस्यसौख्यंस्त्रीपुत्रबंधात्मजनै
र्विनाशं॥६॥दशाधिपात्सोदरराशिगस्यभुक्तौन्नपाच्छिन्नमुपैतिसौख्यं॥सुगंधमा
ल्यांबरभूषणंचसौख्यंचबंधोजनसौख्यपुष्टिम्॥७॥पाकेश्वरात्सुखपतेश्चभुक्तौ
दाराप्तजायांगृहबंधुयानं॥मिष्टान्नपानांबरभूषणंचशुभंगृहेक्षेत्रफलमेतदेव॥८॥

११

पापग्रहोपि शुभदः खलु दायनाथाद्धुर्य्यस्थितः स्वोच्चवलादियुक्तः ॥ सौम्यग्रहोपि शुभदः सुखवापि शि
ष्टकोदायेश्वरात्स्वोच्चवलादिहीनः ॥ ९ ॥ दशानाथात्सुतस्थस्य स्वभेक्षोपत्रादिमादिशेत् ॥ सौम्य
ग्रहस्य सौख्यं च पापग्रहोक्तं सुतक्षयम् ॥ १० ॥ अंतर्दशायां पापस्य षष्ठगस्य दशेश्वरात् ॥ चौ
राग्निजातिदेहार्त्तिं लभते पदविभ्रमं ॥ ११ ॥ तस्मात्षष्ठेतु सौम्यस्य दायेशात्सुखवृंधनं ॥ ल
भतेपुत्रमित्राप्तिः स्वोच्चमूलादिगस्यतु ॥ १२ ॥ दायेशात्सप्तमस्थस्य पापस्यापहृतौ तदा ॥
दारार्थपुत्रवंधूनां नाशं भूपतितो भयम् ॥ १३ ॥ सप्तमस्थशुभस्यापहृतौ सौख्यं दशाधि
पं ॥ नीचमत्रविहीनस्य मह्ढन्नं वनभूषणं ॥ १४ ॥ पाकेशादष्टमस्थस्य सौम्यस्यापहृतौ
सुखं ॥ उत्कोदेशाभने प्रोक्तमंतेकष्टं विनिर्दिशेत् ॥ १५ ॥ दायेशान्नवमस्थस्य पापस्याप
हृतौ यदा ॥ अशुभं लभते कर्मस्थानभ्रष्टमनोहृजां ॥ १६ ॥ प्रधानतः शुभस्थस्य सौम्य

पापहतो यदा॥ विवाहयज्ञादीनां च दानाग्निं लभते नरः॥१७॥ कर्मस्थपापखेटस्य हतो पाकेश्वरो य
दा॥ कर्मनाशमवाप्नोति दुःकीर्तिं विविधापदं॥१८॥ तस्मात्कर्मस्थिताः सौम्याः हतो सौख्यं
विनिर्दिशेत्॥ तस्मात्कर्म गोपुरादीनां पुण्यभर्त्तादिसंग्रहः॥१९॥ लाभस्थस्य दशानाथा पाकेश्वा
यस्य पापहतो धनं॥ लभते पुत्रमित्रादिस्थानप्राप्तिं च शाश्वतीम्॥२०॥ पाकेशाल्लाभय
गेस्य सौम्यस्य पापहतो सुखं॥ सौम्योक्तरनृपान्माभिर्दानपुत्रादिकं धनम्॥२१॥ व्ययस्थ
स्य हतो दुःखं पापस्यान्ते दशाधिपां॥ अर्थनाशं नृपक्रोधं स्थाननाशपरिभ्रमं॥२२॥
पाकेश्वराद्व्ययस्थस्य सौम्याः पापहतो यदा॥ वाहनं भोग्यभाग्यो चैव स्वाभरणभूष
णं॥२३॥ लग्नाधे लोच्चगस्यापि पापस्या पहतो नरा॥ पाकेशा दुःखमाप्नोति सौम्य
भक्तो शुभं भवेत्॥२४॥ अनादिमायां …स्य… महद्रूपं॥ स्यानादिविषु पुत्रादि

दरिनाशोनृपाद्भयम्॥२५॥ शुभभुक्तौ शुभेदाये स्यान्नवाहनभूषणं॥ सौम्यभुक्तौ पापदाये १
त्वादौ सौख्यं ततो भयं॥२६॥ सौम्यदाये पापभुक्तौ त्वादौ कष्टं ततः शुभं॥ शीर्षोदयर्क्षगाः खे
टास्त्वादौ चान्ते न्यऋक्षगाः॥२७॥ मेत्रे वाहुल्यमल्पाद्यं योज्यित्वा फलं वदेत्॥ अथ संवादका
र्येषु यथोक्तफलमादिशेत्॥२८॥ इति पाराशरीयेकेरलशास्त्रे भावस्थदशाभुक्तिफलम्॥
अथादिकदशाकेरणफलं च॥ उक्तमर्त्यसंख्या सहिता गतान्दा पूनीकृता नंदहृता वशेषाः
आचे कुराजीशावुके शुक्रानां महादशेशाः स्युरिहाब्दमध्ये॥१॥ धृतिः १८ खरामाः ३०
कुयमाः २१ भुगा लाग जाव्युयुः ४८ शैलशराः ५७ कुबाणाः ५१॥ चंद्राश्विनो २१ व्योमरसाः
६० के मे राद्दशादिनान्यकं मुखमहाराणां॥२॥ अथ दशाफलं॥ सूर्ये राज्यं कुजालाभः पी
डास्याद्गुरौ संभवा॥ विपत्तिश्चैव बंधूनां विनाशं चाय वदेत्॥३॥ अथ चन्द्रफलं॥ वंध्या

स्त्रीसुतमूलाभोवस्त्राभरणसंयुतं॥ स्वपक्षेवैरकल्याणंजनीराजरतिर्भवेत्॥४॥ अथभौम
फलं॥ रणेभङ्गेविमर्दश्चविग्रहोबांधवैःसह॥ रक्तपित्तहृतापीडावस्त्रीसुसमागमः॥५॥
अथराहोः फलं॥ स्वभावोजायतेदुःखंबंधूनामात्मजैरजः॥ देशांतरेचगमनंधननाशोऽति
विग्रहः॥६॥ अथगुरोः फलं॥ जेष्ठांमानधनंप्राप्तंदेवब्राह्मणपूजनं॥ कर्मरोगस्तथावै
रंस्वजनैःकलहोभवेत्॥७॥ अथशनेः फलं॥ स्नानेश्चर्यान्देहपीडांपुत्रदारैश्चविग्रहः॥
तदृश्रमोवृद्धिनाशोविदेशागमनंभवेत्॥८॥ अथबुधफलं॥ बौध्यांधर्मसमाप्योगोमि
त्रैश्चसुसमागमः॥ प्राप्तिर्धनस्यविपुलादेहपीडाक्षितिकोपजा॥९॥ अथकेतोः फलं॥ नि
द्रालिसंनिरालंबेद्रव्यपुत्रक्षयोभवेत्॥ शत्रुरणंकुलाद्गीतीरणार्थंबहुधाभवेत्॥१०॥
अथशुक्रस्यफलं॥ भोग्यास्त्रीसंगमोलाभोवस्त्राभरणभूषणं॥ कोमलेमहतीकी

२४

र्निर्धनलाभश्च प्रजायते ॥२१॥ इति पाराशरीये केरलशास्त्रे आदिक्रदशाफलकथनो नाम जातके दशाध्यायः समाप्तः ॥ अथ प्रत्यंतर विधानं ॥ अतल तो पधरा जनि राहवः सुरगुरुः शनिसोम्य शिखी शितः ॥ ज्वलन भाश्रमतः स्थिपरिभ्रमता गति ग्रहं त्रितयं त्रितयं न्यसेत् ॥१॥ अथांतर्दशाविधिः ॥ दशा दशाहता कार्या आयंक त्रिगुणां दिनं ॥ पारांका दश कमासाद्यंतर्विधिर्भवेत् ॥२॥ अथ देवी दशा ॥ इष्ट खने त्रैवैहतं रविः स्यात्कूलिचं द्वारसकेः भितः स्यात् ॥ चंद्र दशा भौन शितः शनिः स्याद्रविः स्वपष्ठांशयुतो हि भौमः ॥३॥ त्रिघ्नस्तमोर्कः सविधुर्गुरुश्च भौमः शिखीतेन युतो विधुघ्नः ॥ देवी दशेयं खलु गोपनीया श्री मन्मसरामेश्वर भाषिता वै ॥४॥ अथ प्रत्यंतर्दशाविधिः ॥ प्रत्यंतरो प्रक्रियं कार्या दशान्तसार्धंदशयाहता च ॥ ध्रुवा हिया ता द्विदिकालकाऽन्तर्दशांकतत्साप्रहता भवेद्धि ॥५॥ इति पाराशरीये केरलशास्त्रे जातक प्रकरणे दशाफलकथनो नाम पंचमोऽध्यायः